(४) राजति। 'राजृ दीप्तौ (भू॰ उ॰)' स्वरितेत्। "धियो विश्वा विराजति (ऋ॰ सं॰ १, १, ६, ३)"—"राजन्तमध्वराणाम् (ऋ॰ सं॰ १, १, २, ३)"—इति निगमौ॥

इति चत्वार ऐश्वर्य्यकर्माणः॥ २१॥

## राष्ट्री (१)। अर्य्यः (२)। नियुत्वान् (३)। इनइन (४)। इति चत्वारीश्वरनामानि॥२२॥

(१) राष्ट्री। राजतेरैश्वर्य्यकर्मणः (निघ॰ २,२१, ४)। 'ष्ट्रन् सर्वधातुभ्यः (उ॰ ४, १५४)'—इति ष्ट्रन्प्रत्ययः। व्रश्चादिना (८, २, ३६) षत्वम्। षित्त्वात् ङीप् (४, १, ४१)। "राष्ट्री देवानां निषसाद मन्द्रा (ऋ॰ सं॰ ६, ७, १, ४)"—इति निगमः॥

(२) अर्य्यः। 'ऋ गतौ (भू॰ प॰)'—इत्यस्मात् ण्यति प्राप्ते 'अर्य्यः स्वामिवैश्ययोः (३, १, १०३)'—इति यन्निपात्यते। गम्यते हि सर्वैरीश्वरः। "असर्य्यो गा अजति यस्य वष्टि (ऋ॰ सं॰ १, ३, १, १)"—"मंहिष्ठो अर्य्यः सत्पतिः (ऋ॰ सं॰ ६, १, २५, ६)"—इति निगमौ॥

(३) नियुत्वान्। नियुच्छब्दो व्याख्यातः 'नियुतो वायोः' इत्यत्र १३० पृ॰)। नियुतोऽश्वाः ताभिस्तद्वान्। 'तसौ मत्वर्थे) १, ४, १८)'—इति भसंज्ञाया विधानाज्जश्त्वं न भवति। "अता नो यज्ञमवसे नियुत्वान् (ऋ॰ सं॰ ४, ७, १२, ५)"—इति निगमः।

अस्य स्थाने "पतिः"—इति केचित् पठन्ति। तत्र 'पा रक्षणे (अदा॰ प॰)' 'पातेर्डतिः (उ॰ ४, ५७)'। रक्षिता ह्यीश्वरः। 'पिता पाता वा पालयिता वा'—इति भाष्ये (निरु॰ ४, २१) पत्र पातेरस्मात् बाहुलकात् डतिः कृपस्थि॰

विश स्कन्दस्वामिना उक्तः । "अग्निरिन् वाजानां ५- प्रथ्यास-सं० १, २, २७, २)"—इति निगमः ॥

(४) इनः । एतेः सभाजनार्थे वर्त्तमानात् समुपसर्गार्थ-विशिष्टाद्वा 'इण्सिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इति नक्प्रत्ययः । अर्थस्तु 'तत्रेन इव्येतस्मनितः (निरु० ३, ११)'—इत्यत्र स्कन्दस्वामिना विस्तरेणोक्तः । "इनो विश्वस्य भुवनस्य गोपाः (ऋ० सं० २, ३, १८, १)"—इति निगमः ॥

इति चत्वारीश्वरनामानि । २२ ॥

इति श्रीदेवराजयज्वविरचिते नैघण्टुककाण्डनिर्वचने

द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

**अपस्तुङ्मनुष्याश्रायत्यग्रुवो वश्व्यंन्श्र**

**आवंयत्योजोमघमम्नारेलतेहेलो वर्त्ततेनु-**

**वलिद्रणं इन्वतिदभ्नोतिदिद्युदिरज्यतिराष्ट्रीति**

**द्वाविंशतिः ॥**

**इति निघण्टौ द्वितीयाध्यायः समाप्तः ॥२॥**

---

(४) राजति।
विघ्ना वि॰

# अथ तृतीयाध्यायः।

—:○:—

उरु (१)। तुवि (२)। पुरु (३)। भूरि (४)। शश्वत् (५)। विश्वम् (६)। परीणसा (७)। व्यानशिः (८)। शतम् (९)। सहस्रम् (१०)। सलिलम् (११)। कुवित् (१२)। इति द्वादश बहुनामानि॥ १॥

(१) उरु। उर्वीति पृथिवीनामेति उरुशब्दो व्याख्यातः। आच्छाद्यते ह्यनेनाल्पम्। "उरु क्रतुरुरुस्क्रधि (ऋ॰ मं॰ ६, ५, २६, १)"—इति निगमः॥

(२) तुवि। तवतिर्वृद्ध्यर्थः। सौत्रो धातुः। 'अच इः (उ॰ ४, १३४)'। वृद्धिर्हि बहुः। "तुविजाता उरुक्षया (ऋ॰ सं॰ १, १, ४, ४)"—इति निगमः॥

(३) पुरु। पृणातेः 'पॄभिदिव्यधिगृधिधृषिशिभ्यः (उ॰ १, २३)'—इति कुप्रत्ययः। 'उदोष्ठ्यपूर्वस्य (७, १, १०२)'—इति उत्वम्। पुरुरेव बहुः पुरुभुजा चनस्यतम् (ऋ॰ सं॰ १, १, ५, १)"—इति निगमः।

(४) भूरि। भवतेः 'अदिशदिभूशुभिभ्यः क्रिन् (उ॰ ४, ६५)'—इति क्रिन्प्रत्ययः। भवति तत् सर्वस्यानुग्रहदा। "यत्र गावो भूरिशृङ्गा अयासः (ऋ॰ सं॰ २, २, २४, ५)"—इति निगमः॥

(५) शश्वत्। 'टु ओ श्वि गतिवृद्ध्योः (भू॰ प॰)'। 'संब-

तृम्पहेहत् (उ० २, ७९)'—इत्यादिना द्विर्वचनम्, अभ्यासवकारेकारेकारस्याकारो डित्त्वमाद्युदात्तश्च निपात्यते। परिवर्हते गम्यते वा। "अहं धनानि सञ्जयामि शश्वतः (ऋ० सं० ८, १, ५, १ "—"यच्चिद्धि शश्वता तना (ऋ० सं० १, २, २१, १)"—इति निगमौ॥

(६) विश्वम्। (७) परीणमा।

(८) व्यानशिः। विपूर्वादश्नोतेरुत्सर्गतश्छन्दसि गमादिभ्यो दर्शनात् (३, २, १७१ भा०)'—इति किः। द्वित्वम्। अत आदेः अश्नोतेश्च। विविधं व्याप्नोति। "व्यानशिः पवसे सोमधर्मभिः (ऋ० सं० ७, ३, १२, ५)"—इति निगमः॥

(९) शतम्। 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् (५, १, ५९)'—इति दशदशांशभावस्त च निपात्यते। "दशदशतः" इति निरुक्तम् (३, १०)। निपातनसामर्थ्यात् बहुमात्रेऽपि वर्त्तते। "त्वाजयामः शतक्रतो (ऋ० सं० १, १, ८, ४)"—इति निगमः॥

(१०) सहस्रम्। सहो बलनामसु व्याख्यातम् (१८३पृ०)। रो मत्वर्थीयः। अल्पापि भाविनी शक्तिरस्मिन्नस्ति। "सहस्राक्षरा परमे व्योमन् (ऋ० सं० २, ३, २२, १)" इति निगमः॥

(११) सलिलम्। व्याख्यातमुदकनामसु (८३ पृ०)। गम्यते हि जलवत्। "अप्रकेतं सलिलं सर्वमा इदम् (ऋ० सं० ८, ७, १७, ३)"—इति निगमः। 'सलिलमिति बहुनाम। सलिलं कुविदिति पाठात्'—इति हरदत्तः॥

(१२) कुवित्। निपातोऽयम्। "कुवित् सोमस्यापामिति (ऋ० सं० ८, ६, २६, २)"—इति निगमः॥

इति द्वादश बहुनामानि॥ १॥

**ऋहत् (१)। ह्रस्वः (२)। निघृष्वः (३)। मायुकः (४)। प्रतिष्ठा (५)। कृधु (६)। वम्रकः (७)। दभ्रम् (८)। अर्भकः (९)। क्षुल्लकः (१०)। अल्प (११)। इत्येकादश ह्रस्वनामानि ॥ २ ॥**

(१) ऋहत्। 'रुह बीजजन्मनि (भू० प०)'—'रह त्यागे (भू० प०)'। अनयोः 'संश्चत्तृम्पद्वेहदित्यादयः (उ० २, ७९)'—इति रेफस्य सम्प्रसारणम्, इतिप्रत्ययः, शतृवद्भावश्च निपात्यते। तत्र, दण्डनाथवृत्तिः—'आदिग्रहणाद्दृहद्वियदित्यादयो भवन्ति'—इति। आरुह्यते हि ह्रस्वो वृक्षादिः, त्यज्यते वा दीर्घार्थिभिः। "वृहन्तं चिद्दहते रन्धयानि (ऋ० सं० ७, ७, २१, ३)"—इति निगमः॥

(२) ह्रस्वः। 'सर्वनिघृष्वऋष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे'—इति वन्प्रत्ययान्तो निपात्यते। ह्रसतिः शब्दार्थे पठितः, तथाप्यत्र न्यूनार्थे वर्त्तते। "नमो ह्रस्वाय च वामनाय च (य० वा० सं० १६, ३०)"—इति निगमः॥

(३) निघृष्व। 'घृषु सङ्घर्षे (भू० प०)'। अत्र न्यूनार्थः। इगुपधलक्षणः कः। ह्रस्वशदर्थः। निगमोऽन्वेषणीयः॥

(४) मायुकः। 'डु मिञ् प्रक्षेपणे (क्र्या० उ०)'। 'कृवापा (उ० १, १)'—इत्युण्। स्वार्थे कः। प्रक्षिप्यतेऽनायासेन। निगमोऽन्वेषणीयः॥

(५) प्रतिष्ठा। प्रतिपूर्वात् तिष्ठतेर्न्यूनार्थात् 'घञर्थे कवि-धानम् (३, ३, ५८ वा०)'—इति बाहुलकात् कर्त्तरि कः। प्रतितिष्ठति। निगमोऽन्वेषणीयः॥

(६) कृधु। 'कृती छेदने (रु० प०)'। 'पृभिदिव्यधिगृधि-धृषिभ्यः (उ० १, २३)'—इत्यादिना बाहुलकात् कुप्रत्ययस्त-

कारस्य धकारश्च । 'निक्रान्तमिव हि तद् भवति ह्रस्वत्वादेव'—इति स्कन्दस्वामी । "यो मस्क्ने धोयुग्जगः स्वर्वान् (ऋ० सं० ४, ६, १३, ३)"—इति निगमः ॥

(७) वम्रकः । 'टु वम उद्गिरणे (भ्वा० प०)' न्यूनार्थः । 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना बाहुलकाद्रक् । ततः स्वार्थे कः (५, ३, ८७) । "वम्रकः पुड्भिरुपसर्पदिन्द्रम् (ऋ० सं० ८, ५, १५, ६)"—इति निगमः । "स्तवानो वम्रो विजघान मन्दिह्नः (ऋ० सं० १, ४, १०, ४)"—इत्यत्र 'वम्रः ह्रस्वनामैतत् द्रष्टव्यम् । स्वार्थिककप्रत्ययान्तो ह्रस्वनामसु पठितम्'—इति स्कन्दस्वामी ॥

(८) दभ्रम् । दभतिर्न्यूनार्थः । 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इति रक् । 'नेड् वशि कृति (७, २, ८)'—इतीत्वप्रतिषेधः । "दभ्रं पश्यद्भ्य उर्विया विचक्ष्व (ऋ० सं० १, ८, १, ५)"—इति निगमः ॥

(९) अर्भकः ।

(१०) क्षुल्लकः । क्षुधं लाति । 'आतोऽनुपसर्गे कः (३, २, ३)' । स्वार्थे कः । 'क्षुधं लाति क्षुल्लकः'—इति क्षीरस्वामी । "नमो महद्भ्यः क्षुल्लकेभ्यश्च क्षुल्लका शिपिविष्टका"—इति निगमः ॥

(११) अल्पः । 'अलं भूषणपर्य्याप्तवारणेषु' । 'अलिर्तलिपीड्नृपाभ्यः पः'—इति पः । "अल्पा एनं पशवो भुञ्जन्त उपतिष्ठेरन्"—इति निगमः ॥

इत्येकादश ह्रस्वनामानि । २ ॥

**मुहत् (१) । ब्रुभः (२) । ऋष्वः (३) । बृहत् (४) । उक्षितः (५) । तवसः (६) । तविषः**

(७) । महिषः (८) । अभ्वः (९) । ऋभुक्षाः (१०) । उक्षाः (११) । विहायाः (१२) । यह्वः (१३) । ववक्षिथ (१४) । विवक्षसे (१५) । अम्भृणः (१६) । माहिनः (१७) । गभीरः (१८) । ककुहः (१९) । रभसः (२०) । बाधन् (२१) । विरप्शी (२२) । अद्भुतम् (२३) । बंहिष्ठः (२४) । बर्हिषत् (२५) इति पञ्चविंशतिर्महन्नामानि ॥ ३ ॥

(१) महत् । 'माननान्यान् जहातीति शाकपूणिर्मंहनीयो भवतीति वा (निरु० ३, १३)'—इति भाष्यम् । 'मानेन स्वगुणेन परिमाणेन अन्यान्, यदपेक्ष्य तस्य महत्त्वं, तान् जहाति अतिक्रामति मानशब्दात् जहातेश्चेति शाकपूणिः । निर्वचनलाघवात् मंहतेः पूजाकर्मणो वदत्याचार्यः'—इति स्कन्दस्वामी । उभयत्रापि 'वर्त्तमाने पृषद्बृहन्महत् (उ० २, ७८)'—इत्यतिप्रत्यये निपातनाद्रूपसिद्धिः । "महत्तदुल्बं स्थविरं तदासीत् (ऋ० सं० ८, १, १०, १)"—इति निगमः ॥

(२) ब्रध्नः । व्याख्यातमश्वनामसु (१२४पृ०) । बध्नाति स्वगुणैः सर्वान् वेतनदानेन भृत्यादीन् । "युञ्जन्ति ब्रध्नमरुषञ्चरन्तम् (ऋ० सं० १, १, ११, १)"—इति निगमः ॥

(३) ऋष्वः । 'ऋष गतौ (तु० प०)' । 'सर्वनिघृष्व (उ० १५१)'—इति वन्प्रत्ययो गुणाभावश्च निपात्यते । गम्यते हि महान् सर्वैः गतो वा भूमिम् । इमावर्थौ गत्यर्थेषु बोद्धव्यौ । 'ऋषिर्दर्शनात् (निरु० २, ११)'—इति भाष्यादपि दर्शनार्थम् ।

दर्शनीयो हि महान् "ऋष्वाते इन्द्र स्थविरस्य बाहू ऋ० सं० ४, ७, ३१, ३)" इति निगमः ॥

(४) बृहत्। 'बृहि वृद्धौ (भू० प०)'। 'वर्त्तमाने पृषद्बृहत् (उ० २, ७८)'–इति निपातनम्। परिवृद्धं भवति हि महत्त्वं, वर्द्धतेऽस्मिन्नैश्वर्य्यादि, वर्द्धतेऽनेन समाश्रितः। वृद्धार्थेष्वेवमर्थो बोद्धव्यः। "बृहद्वदेम विदथे सुवीराः (ऋ० सं० २, ५, १८, ६)"–"उरोऋष्वस्य बृहतः (ऋ० सं० १, २, १७, ४)"–इति निगमौ। उरोऋष्वस्येत्यत्र 'ऋष्वस्य महन्नाम, बलवतः, बृहतः एतदपि महन्नामैव। वेगमत्त्वर्थेन न च पुनरुक्तिः। महतः वेगेन शीघ्रस्येत्यर्थः'–इति स्कन्दस्वामिभाष्यम् ॥

(५) उक्षितः। 'उक्षतिर्वृद्ध्यर्थः'–इति स्कन्दस्वामी। निष्ठायामिड़ागमः। निगमोऽन्वेषणीयः ॥

(६) तवसः। तवतिर्वृद्ध्यर्थः। 'अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११७)'। "रजस्तुरं तवसं मारुतं गणम् (ऋ० सं० १, ५, ८, २)"–"तव्वा गृणामि तवसं मतव्यान् (ऋ० सं० ५, ६, २५, ५)"–इति निगमौ ॥

(७) तविषः। तवतेरेव। 'तवेर्णिद्वा उ० १, ४८)'–इति टिषच्प्रत्ययः। "मानं गिरीणां तविषेभिरूर्मिभिः (ऋ० सं० ४, ८, ३०, २)"–इति निगमः ॥

(८) महिषः। महतेः 'अविमह्योष्टिषच् (उ० १, ४५)'। मह्हदर्थः। यद्वा, महतेः क्विप्, सप्तम्येकवचनम्, मदेः 'अन्येष्वपि दृश्यते (३, २, १०१)'–इति डप्रत्ययः, 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'–इति अलुक्, 'सुषामादिषु च (८, ३, ९८)'–इति षत्वम्। महि महति स्थाने सीदन्नास्ते

महिषः। "मुहिषासो मायिनश्चित्रभानवः (ऋ० सं० १, ५, ७, २)"—इति निगमः॥

(९) अभ्वः। व्याख्यातमुदकनामसु (१०६पृ०)। आ समन्तात् भवतीति कीर्त्तिमत्त्वात्। यद्वा, भवतेः सत्तार्थात् प्राप्त्यर्थाद्वा नञ्पूर्वात् 'नञि भुवो डित्'—इति क्वन्प्रत्ययः। न भवत्यनेनोपद्रवोऽस्मिन्निति वा न प्राप्यते लेशैः। "न ये वातस्य प्रमिनन्त्यभ्वम् (ऋ० सं० १, २, १४, १)"—आ यो ना अभ्व ईयते (ऋ० सं० १. ३, १८, ३)"—इति निगमौ॥

(१०) ऋभुक्षाः। 'ऋ गतौ (भृ० प०)'। 'अर्त्तेर्भुक्षिनक्'—इति भुक्षिनक्प्रत्ययः। 'पथिमथ्यृभुक्षामात् (७, १, ८५)' 'इतोऽत् सर्वनामस्थाने (७, १, ८६)'। उरु विस्तीर्णं भाति, ऋतेन सत्येन यज्ञेन वा भाति भवति वा, ऋभुः। मेधावी महत् स्थानं वा। उरुशब्दादुपपदाद् भातेर्भवतेर्वा 'मृगय्वादयश्च (उ० १, ३६)'—इति कुप्रत्ययः। पूर्वपदस्य उवर्णाटिलोपः सम्प्रसारणञ्च निपात्यते। क्षयतेरैश्वर्य्यकर्मणः क्षियतेर्वा 'हृतेश्छन्दसि (उ० ४, १३६)'—इति बाहुलकादिनि टिलोपश्च। ऋभूणां क्षयति ईष्टे, ऋभौ महति स्थाने निवसति वा। "त्वमृभुक्षानयुस्त्वं षाट् (ऋ० सं० १. ५, ४, ३)"—इति निगमः॥

(११) उक्षा। उक्षतेर्वृद्ध्यर्थात् 'श्वन्नुक्षन्पूषन् (उ० १, १५५)'—इति कनिप्रत्ययान्तो निपात्यते। निगमोऽन्वेषणीयः॥

(१२ विहायाः। 'वहिहाधाञ्भ्यश्छन्दसि (उ० ४, २१५)'—इति जहातेर्जिहीतेर्वा बाहुलकात् षुगभावेऽपि युगागमो निपात्यते। "कृणोदुदस्याद्र्याँ३ विहायाः (ऋ० सं० २, १, ४, १)"—इति निगमः॥

(१३) यह्वः। यजतेः 'प्रियवह्वजिह्वाग्रीवाप्वामीवा (उ० १, १५२)'—इति वन्प्रत्ययो जकारस्य हकारश्च निपात्यते। यजते देवपूजादिकं करोति। यद्वा, 'यसु प्रयत्ने (दि० प०)' 'यसोश्च'—इति क्वन्प्रत्ययः'—इति भोजदेवः। यस्यति प्रयत्यते शत्रुत्वाज्जयादौ। 'यह्व इति महतो नामधेयम्, यातश्च हूतश्च भवति'—इति (निरु० ८, ८) भाष्ये 'यातश्चासावाहूतश्च वार्थिभिः, हूतश्चासौ शरणार्थिभिः, द्विधातुजत्वं दर्शितम्' इति स्कन्दस्वामी। ततोऽत्र यातेर्ह्वयतेश्च 'गेहे कः (३, १, १४४)' इति बाहुलकात् भूते कप्रत्ययो ह्वयतेः सम्प्रसारणाभावश्च। "प्रवो॑ य॒ह्वं पु॑रू॒णाम् (ऋ० सं० १, ३, ८, १)"—इति निगमः॥

(१४) ववक्षिथ। (१५) विवक्षसे। 'तत्र ववक्षिथ विवक्षस इत्येते (निरु० ३, १३)'—इत्यादिभाष्ये अनयोराख्यातयोर्महन्नामसु पठनीयत्वं महद्वाचकत्वं चोपपादितं स्कन्दस्वामिना। ववक्षिथेत्यत्र 'सन्यतः (८, ४, ७८)"—इतीत्वाभावः, एकवचनस्य स्थाने बहुवचनम्, क्षकारात् परस्याकारस्येत्वञ्च व्यत्ययेन। "अति॒विश्वं॑ ववक्षिथ (ऋ० सं० १, ६, १, ५)"—"शोरं॑ पाव॒कशो॑चिषं॒ विवं॑क्षसे (ऋ० सं० ७, ७, ४, १)"—इति निगमौ॥

(१६) अभ्भृणः। अमतेः क्विप्। बिभर्त्तेः 'इणसिञ्जिदि (उ० ३, २)'—इत्यादिना बाहुलकात् नप्रत्ययः। "पि॒प्रक्षुं॒-धृष्टिमभ्भृणम् (ऋ० सं० २, १, २२, ५)"—इत्यत्र 'अभ्भृणस्य महतः फलस्य हेतुभूता'—इति स्कन्दस्वामी॥

(१७) माहिनः। महतेः। 'महेरिनण् च (उ० २, ५३)'—इति इनण्प्रत्ययः। "प्रयो॒ न ह॑म्मि॒ स्तोमं॒ माहि॑नाय (ऋ० सं० १, ४, २७, १)"—इति निगमः॥

(१८) गभीरः। वाङ्नामसु व्याख्यातम् (६५ पृ०)। प्रतिष्ठितो महति स्थाने लिप्यन्ते। "उरुव्यचा वरिमता गभीरम् (ऋ० सं० १, ७, २६, २)"—इति निगमः॥

(१९) ककुहः। 'ककु सहने'। 'ककेरुहः'—इति उह-प्रत्ययः। महते अभिभवति शत्रून्, सहते क्षमतेऽपराधान् वा। "युच्यन्ते वां ककुहासः (ऋ० सं० १, ३, ३२, ३)"—इति निगमः। 'ककुहः इति महन्नाम'—इति स्कन्दस्वामी॥

(२०) रभसः। 'रभ राभस्ये (भ्वा० आ०)'। 'अत्यविच-मितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् (उ० ३, ११३)'। रभते महान्ति कर्माणि, संरभ्येवा शत्रुषु। "अधं न वृक्ता रभसासो अद्युः (ऋ० सं० ८, ५, ३, ४)"—इति निगमः॥

(२१) व्राधत्। व्रन्धातेः 'संश्चत्तृम्पद्वेहदित्यादयः उ० २, ७९'—इतीतिप्रत्ययः आ आगमश्च निपात्यते। "स व्राधतो नहुषो दस्मजूतः (ऋ० सं० २, १, २, ४)"—इति निगमः॥

(२२) विरप्शी। 'रप लप व्यक्तायां वाचि (भ्वा० प०)' विपूर्वः। 'रपभृक्रम्यभिकुभ्यः शक्'—इति बाहुलकात् शक्। विविधं रपन्तीति विरप्शाः स्तोतारः, तेऽस्य सन्ति इति विर-प्शी। यद्वा, विविधं रपणं विरपणं तदस्यास्ति वा। अहि महः इत्यसुबन्तपाठश्च। विरप्शी गोमती मही (ऋ० सं० १, १, १६, ३)"—इत्यादीकारान्तोपादानं मन्त्रे हनिवृत्त्य-र्थम्। "क्रत्वे अपिवो विरप्शीन् (ऋ० सं० ४, ७, १२, २)" —"विरप्शिने वज्रिणे शन्तमानि (ऋ० सं० ४, ७, ४, १)" —इति निगमौ।

(२३) अद्भुतम्। 'भू सत्तायाम् (भ्वा० प०)'। 'अदि भुवो डुतच् (उ० ५, १)'। 'अदित्याद्यर्थोऽव्ययम्'—इति क्षीर-

स्वामी। तत्र सम्पूर्वाद् बिभर्तेर्वा बाहुलकात् डुतन्प्रत्यये समोऽभावश्च। सम्यक् पोषितो धनादिभिः, सम्यक् बिभर्त्याश्रितेनेति वा। "सदसस्पतिमद्भुतम् (ऋ० सं० १, १, ३५, १)" "वषट्कृतस्याद्भुतस्य दस्रा (ऋ० सं० १, २, २२, ४)"—इत्यत्र 'महन्नामाद्युदात्तः स्यादत्राश्चर्यभूतेऽन्तोदात्तः स्वरः'—इति माधवः। "तत्र स्तुगोपमद्भुतम् (ऋ० सं० २, २, ११, ४)"—इति निगमः॥

(२४) बंहिष्ठः। बहि महि वृद्धौ (भू० आ०)'। लङ्घिबंह्योर्नलोपश्च (उ० १, २८)'—इति बहुपदम्, तत इष्ठन्प्रत्ययः। 'बंहतेर्बहुलं मत्वर्थीयः'—इति क्षीरस्वामी। अतिशयेन बहुलो बंहिष्ठः। 'प्रियस्थिरस्फिरोरुबहुल (६, ४, १५७)'—इत्यादिना बंहादेशः। यद्वा, 'निचुलवञ्जुलवकुलमूलपृथुलस्थूलविसस्थूलादयः'—इति बहेरुलच्प्रत्ययो नलोपश्च निपात्यते। अन्यत् पूर्ववत्। "यदङ्ग्बंहिष्ठं नाति विधे सुदानू (ऋ० सं० ४, ४, ३१, ३)"—इति निगमः॥

(२५) बर्हिपत्। बृह बृहि वृद्धौ (भू० प०)'। 'बृंहेर्नलोपश्च (उ० २, १०२)'—इति इसिप्रत्ययः। बर्हिःशब्द उपपदे सतः 'सत्सूद्विष (३, २, ६१)'—इत्यादिना क्विप्। पृषोदरादित्वाद्बर्हिषः सकारलोपः। सुषामादित्वात् (८, ३, ९८) षत्वम्। यद्वा, 'अनिते (८, ३, ९९)'—इति। 'सर्वधातुभ्यः (उ० ४, ११४)'—इति इन्। अन्यत् पूर्ववत्। परिवृद्धे स्थाने स्यादिति हि महान्। निगमोऽन्वेषणीयः॥

इति पञ्चविंशतिर्महन्नामानि॥ ३॥

## गयः (१)। कृदरः (२)। गर्त्तः (३) हर्म्यम् (४)। अस्तम् (५)। पस्त्यम् (६)।

दुरोणे (७)। नीलम् (८)। दुर्य्याः (९)। स्वसराणि (१०)। अमा (११)। दमे (१२)। कृत्तिः (१३)। योनिः (१४)। सद्म (१५)। शरणम् (१६)। वरूथम् (१७)। छर्दिः (१८)। छदिः (१९)। छाया (२०)। शर्म (२१)। अजम (२२)। इति द्वाविंशतिर्गृहनामानि ॥४॥

(१) गयः। व्याख्यातमपत्यनामसु (१४५ पृ०)। गम्यते वासाय, गच्छत्यनेन सुखम्। गत्यर्थेष्वेवमर्थो बोद्धव्यः। गीयते स्तूयते स्वास्थ्यातिशयेन, अवन्त्यस्मिन् स्थिता देवा इति च। "अर्चद्दाशुषे गयम् (ऋ० सं० १, ५, २१, २)"—इति निगमः॥

(२) कृदरः। 'कृती छेदने (तु० स० प०)'। 'कृदराद्यश्च (उ० ५, ४४)—इति अरन्प्रत्ययो गुणाभावश्च तकारस्य दकारश्च निपात्यते। कृत्यते छिद्यतेऽनेन कृशः, परिच्छिन्नं वा सुशास्त्रमर्य्यादया। यद्वा, 'दृङ् आदरे (तु० आ०)'। 'शृदृभसोऽदिः—निश्चिगमश्च (३, ३, ५८)'—इत्यप्। कृतो दर आदरोऽत्र कृतदरः। पृषोदरादित्वात् (६, ३, १०९) तशब्दलोपः। निगमोऽन्वेषणीयः॥

(३) गर्त्तः। 'गॄ शब्दे (क्र्या० प०)' स्तुतिकर्मा वा। 'हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् (उ० ३, ८३)'—इति तन्प्रत्ययः। शब्द्यते तस्मिन् स्तूयते वा। निगमोऽन्वेषणीयः॥

(४) हर्म्यम्। 'हृञ् हरणे (भ्वा० उ०)'। 'मथ्यविध्यशिभ्य'—इति यन्प्रत्ययो मुडागमो गुणश्च निपात्यते। हरति मनुष्यते आक्रियतेऽत्र धान्यादि। यद्वा, 'षम ष्टम वैक्लव्ये

मता (भू० प०)'। भव्यादित्वात् (उ० ४, १०८) यत्प्रत्ययः। "मृन्वोरियाय कृम्येषु तस्थौ (ऋ० सं० ८, ३, ४, ४)"—इति निगमः ॥

(५) अस्तम्। 'अस् भुवि (अदा० प०)' 'अस गतिदीप्त्यादानेषु (भू० उ०)' 'असु क्षेपणे (दि० प०)'। 'हसिमृग्रिण्वामि (उ० ३, ८६)'—इति बाहुलकात् तन्। द्वितीयैकवचनं भवत्यङ्गनसुखं दीप्यते हि तत्। आदीयते क्षिप्यते वा तदर्थिभिः, क्षियन्तेऽस्मिन् पदार्था इति वा। "अस्तं न गावो नक्षन्त इद्धम् (ऋ० सं० १, ५, १०, ५)"—इति निगमः। "तमग्निमस्ते वसवो न्यृण्वन् (ऋ० सं० ५, १, २३, २)"—इति च ॥

(६) पस्त्यम्। 'अघ्न्यविघ्न'—इत्यादिनौणादिकः यक्, सुगागमश्च निपात्यते। पसन्त्यस्मिन्। यद्वा, 'पत्लृ गतौ (भू० प०)'। निपातनात् सकार उपजनः। 'पस्त्या पत्नीः सङ्गत्यर्थे वा'—इति माधवः। "वरुणः पस्त्याःस्वा (ऋ० सं० १, २, १७, ५)"—"प्रप्र दाश्वान् पस्त्याभिरस्थित (ऋ० सं० १, ३, २१, २)"—इति निगमौ। 'पस्त्यमिति गृहनाम। अजादित्वात् (४, १, ४) टाप्'—इति स्कन्दस्वामी।

(७) दुरोणे। 'राजाधाना'—इत्यादिभोजसूत्रे आदिग्रहणात् दुरोणादयः'—इति वृत्तिः। दुःपूर्वात् अवतेर्नक्षि वटि गुणः। 'दुरोण इति गृहनाम। दुःखाभवन्ति दुस्तर्पाः (निरु० ४, ५)'—इति भाष्ये दुःशब्दपूर्वस्यावतेः रक्षणार्थस्य तर्पणार्थस्य वा क्षुटि छान्दसत्वात् सम्प्रसारणम्, आद्गुणश्च। गृहादयो दुःखाभवन्ति दुस्तर्पा इति पर्य्यायेणाख्यार्थकथनम्'—इति स्कन्दस्वामी। "हुष्टोदमूर्णा अतिथिर्दुरोणे (ऋ०

सं० ३, ८, १८, ५)"—मध्वे निर्वतोदुरोणे दुरोणे (ऋ० सं० १, ५, १३, २)"—इति निगमौ ।

(८) नीलम् । 'व्याडक्रोडकुहोडादयः'—इति डच्-प्रत्ययः, प्रत्ययादेर्लोपो गुणाभावश्च निपात्यते । नीयन्तेऽत्र पदार्थाः, नयति सुखनिःश्वसनमिति वा । "आ यो मुहुः मूरः मनादनीलः (ऋ० सं० ८, १, १७, १)"—इति निगमः ।

(९) दुर्य्याः । 'दुर्वी हिंसार्था (भू० प०)' । 'अघ्न्यादित्वाद् यत्प्रत्यये वकारलोपे दीर्घाभावश्च निपात्यते । हिंसन्ति मोनाति हि तं दुःखम् । यद्वा, दुःशब्दपूर्वात् यातेः 'घञर्थे कविधानम् (३, ३, ५८, वा० २)'—इति कः । 'दुःखेन प्राप्यन्ते, दुरः गृहद्वाराणि अर्हन्तीति वा दुर्य्या गृहा उच्यन्ते' —इत्युवटः । "अवो रक्षा प्रचेता सोम दुर्य्यात् (ऋ० सं० १, ६, २२, ४)"—इति निगमः ॥

(१०) स्वसराणि । व्याख्यातमहर्नामसु ( ४६ पृ० ) । स्वेन स्वननेन स्नियते प्राप्यते रवैर्गृहवतो ज्ञातिभिः स्नियते, सुखं वसन्ते वास्मिन् पदार्थाः । निगमोऽन्वेषणीयः ॥

(११) अमा । 'अम गतिभक्षशब्देषु (भू० प०)' । 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)' । गम्यन्तेऽस्मिन् भक्ष्यन्ते शब्दायन्ते वा । यद्वा, निपातोऽयम् । "अमात्यम् (ऋ० सं० ५, २, २०, १)"—इत्यत्र, उवटः—'अमा गृहवचनः सह-वचनो वा । अव्ययात् त्यप् तत्र भव इत्यर्थे । गृहे सन्ध्याता भवति अमात्यः'—इति । "सा नो अमा सो अरणे नियातु (ऋ० सं० ८, २, ५, ७)"—"अमा सतं वहसि भूरि वामम् (ऋ० सं० २, १, ९, २)—"अमाजूरिव पित्रोः सचासती (ऋ० सं० २, ६, २०, २)"—इति निगमाः ॥

(१२) दमे । 'दम उपशमने (दि० प०)' । घञ् । 'नोदात्तो-

तोपदेशस्य (७, २, ३४)'—इति इडिप्रतिषेधः। शाम्यति-
नेन शीतादि, दान्तः क्लेशः। "वर्धमानं स्वे दमे (ऋ० सं०
१, १, २, ३)"—"इस्कर्तारं दमेदमे (ऋ० सं० ३, ५, ६, २)"
—इति निगमौ ॥

(१३) छत्तिः। 'छती छेदने (तु० रु० प०)'। क्तिन्।
छदरवदर्थः। निगमोऽन्वेषणीयः ॥

(१४) योनिः। व्याख्यातमुदकनामसु (१०१ पृ०)।
मिश्रूतेऽनेन सुखम्, पृथग्भूयस्तेऽनेनाविष्टा इति, परीवीतो
वा प्राकारादिना जायेव। जायेव योनावरं विश्वस्मै (ऋ० सं०
१, ५, १०, ३)"—इति निगमः ॥

(१५) सद्म। सदेर्मनिन्। सीदत्यस्मिन्। "सद्मेव
धीराः सम्मायं चक्रुः (ऋ० सं० १, ५, ११, ५)"—इति
निगमः। 'सद्म गृहनाम'—इति स्कन्दस्वामी ॥

"वर्म" इति केचित् पठन्ति। वृणोतेर्मन्। व्रियते तेन,
संवृण्यते वा गृहिभिः। निगमोऽन्वेषणीयः ॥

(१६) शरणम्। शृणातेः 'युच् बहुलम् (उ० २, ७४)'—
इति युच्। शृणाति शीतादिक्लेशम्, रक्षितवान् वा क्लेशेभ्यः
'शरिः प्राप्त्यर्थः'—इति माधवः। प्राप्यते हि तत्। "तोद-
स्येव शरण आ महस्य (ऋ० सं० २, २, १८, १)"—इति
निगमः ॥

(१७) वरूथम्। 'वृञ् वरणे (स्वा० उ०)'। 'जृवृञ्भ्या-
मूथन् (उ० २, ५)'। वसंवदर्थः। "भवा वरूथं गृणते
विभावो (ऋ० सं० १, ४, २४, ४)"—इति निगमः ॥

(१८) छर्दिः। 'छर्द सन्दीपने (चु० प०)'। 'अर्चिशुचि-
हुसृपिच्छादिछर्दिभ्य इसिः (उ० २, १०१)'। सन्दीप्यते शोभया।
"... ...तादवसं पृथु छर्दिः (ऋ० सं० १, १, ३, ५, ५)"—

"वरू॑थ॒ मस्ति॒यच्छ॒र्दिः (ऋ॰ सं॰ ६, ४, ५२, १)"—इति निगमौ॥

(१९) छर्दिः। 'छद अपवारणे (चु॰ उ॰)'। णिच्। पूर्ववदिस्। 'छादेर्घे ह्युपसर्गस्य (६, ४, ९६)'। 'इस्मन्त्र-न्क्विषु च (६, ४, ९७)'—इति ह्रस्वः। णिलोपः। छाद्यते हि तत्। निगमोऽन्वेषणीयः॥

(२०) छाया। 'छो छेदने (दि॰ प॰)'। माछासमीसू-भ्यो यः। हृत्तिवदर्थः। छायाकरत्वाद्वा छाया। "यस्य॑ छा॒या-मृत॑म् (ऋ॰ सं॰ ८, ७, ३, २)"—इति निगमः॥

(२१) शर्म। शृणातेः शरेः श्रयतेर्वा मन्। श्रयतेर्बा-हुलकाद्रूपसिद्धिः। श्रीयते हि तत्। अन्यत्र शरणवदर्थः। "स्वामिदिन्द्र॑स्य॒ शर्म॑णि (ऋ॰ सं॰ १, १, ८, १)"—"त्रि॒धातु॒ शर्म॑ वहतं शुभस्पती (ऋ॰ सं॰ १, ३, ४, ६)"—इति निगमौ॥

(२२) अज्म। अजेः 'अर्त्तिस्तुसुहुसृधृक्षिच्० (उ॰ १, १३७)'—इत्यादिना बाहुलकात् मन्। अस्तवदर्थः। "येषा॒-मज्मे॑षु पृथि॒वी (ऋ॰ सं॰ १, ३, १३, ३)"—इति निगमः॥

इति द्वाविंशतिर्गृहनामानि॥ ४॥

इ॒र॒ज्यति॑ (१)। वि॒धेम॑ (२)। स॒प॒र्यति॑ (३)। न॒म॒स्यति॑ (४)। दु॒व॒स्यति॑ (५)। ऋ॒ध्नोति॑ (६)। ऋ॒णद्धि॑ (७)। ऋ॒च्छति॑ (८)। सप॑ति (९)। विवासति (१०)। इति दश परिचरण-कर्माणः॥ ५॥

(१) इरज्यति। 'इरज् ईर्ष्यायाम्' कण्ड्वादिः, यक्लिष-

षु । अनेकार्थत्वात् इत्यादि यदुक्तं तत्त्विहाध्याये सर्वेषु धातुषु तद् बोद्धव्यम् ॥

(२) विधेम। 'विध विधाने' तुदादि:। लिङुत्तमपुरुष-बहुवचनम्। "युष्मे विधेम नमसा हविर्भिः (ऋ० सं० २, ७, २४, २)"—"हविष्मन्तो विधेम ते (ऋ० सं० १, ३, ८, २)"—"होतेव सद्म विधुतो विहारीत् (ऋ० सं० १, ५, १, १)"—इति निगम: ॥

(३) सपर्यति। 'सपर पूजायाम्' कण्ड्वादि:। "दूतं देव सपर्यति (ऋ० सं० १, १, २३, २)"—इति निगम: ॥

(४) नमस्यति। 'नमोवरिवश्चित्रङ: क्यच् (३, १, १९)'। नमस: सञ्ज्ञायाम्। नम: करोति। "इन्द्रं नमस्यन्नुपमेभिरर्कैः (ऋ० सं० १, ३, १, २)"—"यं नमस्यन्ति कृष्टयः (ऋ० सं० १, ३, ११, ४)"—इति निगमौ ॥

(५) दुवस्यति। 'दुवस परिचरणे, परितापे च' कण्ड्वादि:। "दुवस्यन्ति स्वधागो अध्वर्याणाम् (ऋ० सं० १, ५, २, २)"—इति निगम: ॥

(६) ऋध्नोति। "ऋधु वृद्धौ" स्वादि:। अतएव "आ ऋध्नोति हविष्कृतिम् (ऋ० सं० १, १, ३५, ३)"—इति निगम: ।

(७) ऋणद्धि। व्यत्ययेन श्नम् ।

(८) ऋच्छति। 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु' (तु० प०) ॥

(९) सपति। 'षप समवाये (भू० प०)'। "अविद्वांसो विदुष्टरं सपेम (ऋ० सं० ४, ५, १८, ५)"—इति निगम: ॥

(१०) विवासति। नैरुक्तधातु:। 'विपूर्वात् वसेर्णिच्'। 'छन्दस्युभयथा (३, ४, ११७)'—इति अपि आर्द्धधातुकत्वात्

विलोपः'—इति महाभास्करमिश्रः। "हुविष्व ।७ प्राविवासः (ऋ० सं० १, १, २३, ३)"—इति निगमः॥

इति दश परिचरणकर्माणि॥ ५॥

शिम्बाता (१)। शतरा (२)। शातपन्ता (३)। शर्म (४)। स्यूमकम् (५)। शेवृधम् (६)। मयः (७)। सुग्म्यम् (८)। सुदिनम् (९)। शूषम् (१०)। शुनम् (११)। शग्मम् (१२)। भेषजम्(१३)। जलाषम् (१४)। स्योनम् (१५)। सुम्नम् (१६)। शेवम् (१७)। शिवम् (१८)। शम् (१९)। कम् (२०) इति विंशतिः सुखनामानि॥ ६॥

(१) शिम्बाता। 'शिङ् निशाने (स्वा० उ०)'। निम्बविम्बशिम्बडिम्बस्तम्बसम्बादयः'—इति शिनोतेर्वप्रत्ययो मुम् निपात्यते। अततेर्घञ्। दुःखानि तनूकुर्वत् प्राप्यते॥

(२) शतरा। शतं बहु, अनेकमिन्द्रियप्रसादादि राति ददाति 'आतोऽनुपसर्गे कः (३, २, ३)'॥

(३) शातपन्ता। 'शो तनूकरणे (दि० प०)' निष्ठा। पततेः 'हसिमृग्रि एवामि (उ० ३, ८३)'—इति बाहुलकात् तन्। शातेन दुःखानां तनूकरणेन पत्यते सूयते। विष्वपि द्विवचनस्याकारः। मिवेवं कृता शतरा शातपन्ता (ऋ० सं० ८, ६, १, ५)"—इति निगमः॥

(४) शर्म। व्याख्यातं गृहनामसु (२५६पृ०)। "ता नो देवीः सुहवाः शर्म यच्छत (ऋ० सं० ४, २, २८, ७)"—इति

निगमः॥ अस्य स्थाने "श्रिग्नुः"—इति केचित् पठन्ति। 'श्रग मतौ (भू० प०)'। 'वलिफल्योर्गुक् च)'—इति कुप्रत्ययो बाहुलकादकारस्येकारः। गम्यते पुरुषवद्भिः, गच्छत्यनेन इमिम्, गच्छति वान्यमनित्यत्वात्। एवमर्था मत्वर्थेषु बोद्धव्याः। निगमोऽन्वेषणीयः॥

(५) स्यूमकम्। 'षिवु तन्तुसन्ताने (दि० प०)'। 'श्रवि-सिविसिशुषिभ्यः कित् (उ० १, १४१)'—इति मन्प्रत्ययः। 'छ्वोः शूड़नुनासिके च (६, ४, १९)' यणादेशः, स्वार्थे कः। स्यूतं पुरुषवति। निगमोऽन्वेषणीयः॥

(६) शेवृधम्। शेशब्दे उपपदे वृधेः इगुपधलक्षणः कः। शेवस्य वर्द्धयितृ शेवृधम्। पृषोदरादित्वादुभयत्र रूपसिद्धिः। "स शेवृधमधि धा द्युम्नमस्मे (ऋ० सं० १, ४, १८, ६)"—इति निगमः॥

(७) मयः। 'मिञ् हिंसायाम् (स्वा० उ०)'। असुन्। हिनस्ति दुःखम्। "मयः कृणोषि प्रयु आ च सूरये (ऋ० सं० १, २, ३३, २)"—इति निगमः॥

(८) सुग्म्यम्। सुपूर्वात् गमेः अघ्न्यादित्वात् यत्प्रत्यय उपधालोपश्च। "उषा ददातु सुग्म्यम् (ऋ० सं० १, ४, ५, ३)"—"आ सुग्म्याय सुग्म्यम् प्राता (ऋ० सं० ६, २, ७, ५)"—इति निगमौ॥

(९) सुदिनम्। व्याख्यातमहर्नामसु (४७ पृ०), अत्र सुपूर्वम्। सुष्ठु द्यति दुःखम्, खण्ड्यते वा भाग्यविपर्ययेण। निगमोऽन्वेषणीयः॥

(१०) शूषम्। व्याख्यातं बलनामसु (१८२ पृ०)। शूषः-त्वनेन दुःखम्, प्रियावहत्वं सुखम्। "साम्राके भिरेतरी न शूषैः (ऋ० सं० ४, ५, १४, ४)"—इति निगमः॥

(११) शुनम्। 'शुन गतौ (तु० प०)'। 'गेहे कः (३, १, १४४)'—इति बाहुलकात् कः। "शुनं नः फाला वि कृषन्तु भूमिम् (ऋ० सं० ३, ८, ६, ८)"—शुनं हुवेम मघवानमिन्द्रम् (ऋ० सं० ३, २, ४, ७)—इति निगमौ॥

(१२) शग्मम्। शंशब्दे उपपदे गमेः 'गेहे कः (३, १, १४४)'—इति कः। गमहनेत्युपधालोपः (६, ४, ९८)। पृषोदरादित्वात् शमो मलोपः। सुखं गम्यतेऽनेन दुष्कृतादिशमनेन वा। यद्वा, शकेः 'युजिरुचितिजां कुश्च (उ० १, १४३)'—इति बाहुलकात् मक्प्रत्ययः, ककारस्य गकारश्च। शक्नोति तृप्तिं जनयितुम्। "वास्तोष्पते शग्मया संसदा ते (ऋ० सं० ५, ६, २१, ३)"—इति निगमः॥

(१३) भेषजम्। (१४) जलाषम्। व्याख्याते उदकनामसु (१०८पृ०) भिषज्यतिरत्र सुखनार्थः। "रुद्रं जलाषभेषजम् (ऋ० सं० १, ३, २६, ४)"—इति निगमः॥ 'जलाषजं सुखादौषधम्'—इति स्कन्दस्वामिभाष्यम्॥

(१५) स्योनम्। 'षिवु तन्तुसन्ताने (दि० प०)'। 'सिवेष्टेर्यूट् च (उ० ३, ८)'—इति नप्रत्यये गुणः। स्यूमवदर्थः। स्योनमिति सुखनाम, 'स्यतेरवस्यन्त्येतत्'—इति (निरु० ८, ९) भाष्ये 'स्यतेः सेवतेश्च स्योनम्'—इति व्याख्यातं स्कन्दस्वामिना। तत्र बाहुलकान्नप्रत्यये टेर्यूट्। "देवेभ्यो अदितये स्योनम् (ऋ० सं० ८, ६, ८, ४)"—"स्योना पृथिवि भव (ऋ० सं० १, २, ६, ५)"—इति च निगमौ॥

(१६) सुम्नम्। 'राशदिभ्यां त्रिप्' ... 'रास्नासास्नास्थूणावीणाः' ... [सुम्नद्युम्नानिम्नेति] भोजसूत्रम्। शोभनेन कर्मणा मीयते निर्मीयते, सुष्ठु मीयते परिच्छिद्यते भागिनेति वा। "कं वः सुम्ना नव्यांसि (ऋ० सं० १, ३, १५, ३)"—"सुम्नायं वर्तयामसि (ऋ० सं० ६, ४, ५१, १)"—इति निगमौ॥

(१७) शेवम्। (१८) शि
पा०)'। 'इण्शीभ्यां वन् (उ॰
, १५१)'—इति शीङो ऽ
पात्यते। 'शेवमिति सुखनाम
थे। शिष्यतेर्व्युत्पादितावेतौ। त
यं, शेषयति वा स्वाश्रयम्। "जन
ऋ॰ सं॰ १, ५, १३, २)"—"शिव
गात् (ऋ॰ सं॰ १, ५, २७, २)"—इति।

(१९) शम्। निपातोऽयम्। यद्वा, शाम्य
यिष्ठ क्लेशानाम्। "शं ते सन्तु प्रचे॑तसे (ऋ॰
॰, २)"—इति निगमः॥

(२०) कम्। अयमपि निपातनम्। "श्रियमे कं भ्राम्मि॑मिचिरे (ऋ॰ सं॰ १, ६, १३, ६)"—"आ वो मक्षू तना॑य कम् (ऋ॰ सं॰ १, ३, १८, २)"—इति निगमौ। "अहे कमिन्द्र चरतो वितर्त्त॑रम् (ऋ॰ सं॰ १, ७, १४, २)"—इत्यत्र 'कमिति सुखनामेदमव्ययम्'—इति हरदत्तः॥

इति विंशतिः सुखनामानि॥ ६॥

**निर्णिक् (१)। वव्रिः (२)। वर्पः (३)। वपुः (४)। अमतिः (५)। अप्सः (६)। प्सुः (७)। अप्नः (८)। पिष्टम् (९)। पेशः (१०)। कृशनम् (११)। प्सरः (१२)। अर्जुनम् (१३)। ताम्रम् (१४)। अरुषम् (१५)। शिल्पम् (१६)। इति षोडश रूपनामानि॥ ७॥**

(१) निर्णिक्। 'णिजिर् शौचपोषणयोः (जु॰ उ॰)'

नवषट्;) । ५

हि तत्, पोषयति वा प्रीतिम

सं० १, २, १८, ३)"—इ

ं (स्वा० उ०)'। 'श्राद्दगमहन

२, २, १७१)' द्विर्वचनम्, किल्वात

तद्धि स्वाश्रयमावृणोति, व्रियते वा।

वव्रि मा हत (ऋ० सं० २, ३, १८, ४)"–

'व्रड् सम्भक्तौ (क्रया० श्रा०)'। 'व्रज्मोङ्भ्यां

ट् च (उ० ४, १८६)'—इत्यसुन्। भज्यते हि

ोतेर्वा बाहुलकादसुन् युट् च। वव्रिवदर्थ:। "मा

स्मदप गूह एतत् (ऋ० सं० ५, ६, २५, ६)"—इति

॥

(४) वपु:। व्याख्यातमुदकनामसु (१०६ पृ०)। उप्यते

स्वाश्रय: "वपुर्भिराचरती अन्यान्या (ऋ० सं० १, ५, २, ३)"

—इति निगम:॥

(५) श्रमति:॥

(६) अप्स:। 'अप्स इति रूपनामाप्सातेः (निरु० ५, १३)'

—इत्यादिभाष्ये स्कन्दस्वामिना अप्सशब्दो व्युत्पादित:। तत्

प्रकारेण निर्वचनं प्रदर्श्यते। नञ्पूर्वात् प्सातेरसुनि बाहुल-

कादाकारलोप: आप्नोतेर्वा। 'वृतृवदिहनिकमिकषिभ्य: स:

(उ० ३, ५८)'—इति सप्रत्यय:। "उषाहुस्तेव निरिणीते

अप्स: (ऋ० सं० २, १, ८, २)"—"अप्स रस: परि जज्ञे वसिष्ठ:

(ऋ० सं० ५, ३, २४, २)"—"अप्स रसां गन्धर्वाणाम् (ऋ० सं०

८, ७, २४, ६)"—इति निगमा:॥

(७) प्सु:। 'स्फुर स्फुलने (तु० प०)'। 'मृगय्वादयश्च (उ०

...)—इति उनुप्रत्ययः, सकारपकारयोः फकारस्य च व्यत्य-
...निपात्यते। स्फुरति हि तत्। "वहन्ते अप्रुत प्सुवः
... सं० ६, १, ३७, २)"—"युवा इन्द्र मघाता अप्रुत प्सुवः
... सं० १, ४, १२, ४)"—इति निगमौ ॥

(८) अप्रः। अपत्यनामसु व्याख्यातम् (१४५ पृ०)। तेन
...तत्समाश्रयं व्याप्नोति। "अभिसक्ति जन्यया ता अन-
... ऋ० सं० २, ६, ३०, ४)"—इति निगमः ॥

(...) पिष्टम्। 'पिश अवयवे (तु० प०)' 'पिस गतौ (भू०
...)'—इति चीरस्वामी। 'पिशेः किच्च (उ० ३, ८२)'—
...क्तः, गुणाभावश्च, 'तितुत्रथ (७,२, ८)'—इतीट्प्रतिषेधः।
...शितम्, अवयवशो विभक्तमित्यर्थः'—इति स्कन्दस्वामी।
...श आम्लवणार्थः'—इति माधवः। आश्लिष्यत्याश्रयम्।
पिष्टं ...भिर्रश्मिभिः (ऋ० सं० ४, ३, १८, १)"—इति
...गमः ॥

(१०) ...नम्। (११) पेशः। व्याख्याते हिरण्यनामसु
(...१६ पृ०) दीप्यते हि तत्, दीप्यतेऽनेन वा तद्वान्। पेशसः
पिष्टवदर्थः। ...नस्य निगमोऽन्वेषणीयः। "पेशो मर्या
अपेशसे (ऋ० सं० १, १, ११, ३)"—इति निगमः ॥

(१२) प्सरः। 'स्फुर स्फुलने (तु० प०)'। असुन्। पृषो-
दरादित्वात् (६, ३, १०८) सकारपकारयोर्व्यत्ययः। स्फुरति
हि तत्। "मद्रि प्सरो वरुणस्य (ऋ० सं० १, ३, २३, २)"
—"वयां टेव प्सरस्तम (ऋ० सं० १, ५, २३, १)"—इति
निगमौ ॥

केचिदत्र मदच्छन्द पठन्ति। तद्धिरण्यनामसु व्याख्या-
तम् (१७पृ०)। निगमोऽन्वेषणीयः ॥

(१३) अर्जुनम्। व्याख्यातमुषोनामसु (४१पृ०) अर्जु-

(९) वामः। 'वनषण सम्भक्तौ (भू०प०)'। 'इषियुध्निदसिश्यासुसूभ्यो मक् (उ० १, १४२)'—इति बाहुलकात् प्रत्ययः, नकारस्याकारश्च। सम्भजनीयो हि प्रशस्यः। "दत्से इ अनुददासि वामम् (ऋ० सं० २, ५, १२, ५)"—इति निगमः॥

(१०) वयुनम्। अजतेः 'अजियमिशीङ्भ्यश्च (उ० ५८)'—इत्युनन्प्रत्ययः, वीभावः। असेमवदर्थः। 'वयुनं वेतेः, कान्तिर्वा प्रज्ञा वा (निरु० ५, १४)'—इति भाष्यम्। तत्र बाहुलकादुनन्, मत्वर्थीयस्य लुक्, कान्तिमान् प्रज्ञावान् वा। "विमानमग्निर्वयुनश्च वाघताम् (ऋ० सं० २, ८, २४)"—इति निगमः॥

॥ इति दश प्रशस्यनामानि॥ ८॥

केतः (१)। क्रतुः (२)। चेतः (३)। चित्तम् (४)। क्रतुः (५)। असुः (६)। धीः (७)। शचीः (८)। माया (९)। वयुनम् (१०)। अभिख्या (११)। इत्येकादश प्रज्ञानामानि॥९॥

(१) केतः। 'चायृ पूजानिशामनयोः (भू०उ०)'। 'चायः कौ (उ० १, ६५)'—इति तप्रत्ययो धातोः कीरादेशो गुणश्च। पूज्यते। "पुरु त्वो अनु केतमायम् (ऋ० सं० ८, ५, १, ५)"—इति निगमः।

(२) क्रतुः।

(३) चेतः। (४) चित्तम्। 'चिती सञ्ज्ञाने (भू०प०)'। 'असिहसिभ्यः (उ० ३, ८६)'—इति बाहुलकात् क्तः। केतव-

र्थः । "ऋतावानं विचेतसम् (ऋ० सं० ३, ५, ६, ३)"-"सत्याचित्तं चित्तेन ममृतम्" इति निगमौ ॥

(५) क्रतुः । व्याख्यातं कर्मनामसु (१३८ पृ०) क्रियतेऽनया धर्मादिविचारः । "अग्निर्होता कविक्रतुः (ऋ० सं० १, १, १, ५)"—इति निगमः ॥

(६) असुः । अस्यतेः 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इति उप्रत्ययः । 'असुरिति प्राणनाम (निरु० ३, ८)' -इति भाष्ये, अस्यति क्षिपत्यनर्थान्, अस्ताः क्षिप्ताः अस्या-अर्थाः इत्यर्थप्राप्त्यनर्थपरिहारात्मकमुभयमपि प्राप्नोति ॥

(७) धीः । (८) शची । व्याख्याते कर्मनामसु (१४१, १४२, पृ०) । निधीयते द्रव्येषु, धारयत्यर्थान् ध्यायन्तेऽनया देवताः, गम्यन्ते अवगम्यन्तेऽनयार्थाः, गच्छत्यनया इष्टप्राप्तिमनिष्टपरिहारञ्च । "चिदसि मनासि धीरसि (य० वा० सं० ४, १९)"—"दोषावस्तर्धियावयम् (ऋ० सं० १, १, २, १)" —"ऋतणोरत्नं न शचीभिः (ऋ० सं० १, २, ३१, ५)"—इति निगमाः ॥

(९) माया । 'माङ् माने (अदा० पा०)' । 'माछाससिभ्यो यः (उ० ४, १०६)'—इति यप्रत्ययः । मीयन्ते परिच्छिद्यन्तेऽनया पदार्थाः । "मायाभिरिन्द्र मायिनम् (ऋ० सं० १, १, २१, ७)"—"इमामूनु कवितमस्य मायाम् (ऋ० सं ४, ४, ३१, १)"—इति निगमौ ॥

(१०) वयुनम् । व्याख्यातं प्रशस्यनामसु (२६६ पृ०) । गतौ शचीवदर्थः, क्षेपणेऽसुवत् । "विद्वाँ अग्ने वयुनानि क्षितीनाम् (ऋ० सं० १, ५, १७, २)"—इति निगमः ।

(११) अभिख्या । 'ख्या प्रकथने (अदा० प०)' । 'आतश्चोपसर्गे (३, ३, १०६)'—इत्यङ् । प्रकर्षेण कथ्यन्तेऽनयार्थाः ।

"द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः" —इति निगमः। भाष्यं द्रष्टव्यम्।

इत्येकादश प्रज्ञानामानि॥ ९॥

बट् (१)। श्रत् (२)। सत्रा (३)। अद्धा (४)। इत्था (५)। ऋतम् (६)। इति षट् सत्यनामानि॥ १०॥

(१) बट्। (२) श्रत्। (३) सत्रा। (४) अद्धा। (५) इत्था। वडादयो निपाताः। "बण्महाँ असि सूर्य (ऋ० सं० ६, ७, ८, १)"—"श्रद्धयाग्निः समिध्यते (ऋ० सं० ८, ८, ९, १)"—"सत्रादावन्नपा वृधि (ऋ० सं० १, १, १४, १)"—"सत्यमद्धा नकिरन्यस्त्वावान् (ऋ० सं० १, ४, १४, ३)"—"मुच्चिन इत्था धिया नरा (ऋ० सं १, १, ४, १)"—इति निगमाः॥

(६) ऋतम्। व्याख्यातमुदकनामसु (१०० पृ०)। गच्छत्यनेन सुगतिम्। 'ऋतम् सत्तैः, प्राप्यते तदिन्द्रियैः'—इति माधवः। "ऋतेन मित्रावरुणौ (ऋ० सं० १, १, ४, २)"—इति निगमः।

इति षट् सत्यनामानि॥ १०॥

चिक्यत् (१)। चाकनत् (२)। आचक्ष (३)। चष्टे (४)। विचष्टे (५)। विचर्षणिः (६)। विश्वचर्षणिः (७)। अवचाकशत् (८)। इत्यष्टौ पश्यतिकर्माणः॥ ११॥

(१) चिक्यत्। (२) चाकनत्। (३) आचक्ष। (४) चष्टे। (५) विचष्टे। इति पञ्चैते दर्शनार्थानि आख्यातानि।

'[illegible]यदित्यादीनि चायत्यर्थनिगमानि'—इति स्कन्दस्वामिना भाष्यमुक्तम्। 'कित ज्ञाने (भू० प०)' यङ्लुकि शतरि व्यत्ययेन 'नुगतोऽनुनासिकान्तस्य (७, ४, ८५)'—इति न भवति। निगमोऽन्वेषणीयः॥

(३) आचक्ष्म। आङ्पूर्वस्य चक्षिङो लङि महिङो मसादेशो व्यत्ययेन। "अतश्चचाग्ने अदितिं दितिं च (ऋ० सं० ३, ३१, ३)"—इति निगमः॥

(४) चष्टे। (५) विचष्टे। केवलात् विपूर्वाच्च आत्मनेपदप्रथमपुरुषैकवचने संयोगादिलोपे ष्टुत्वे च रूपम्। "तेभिश्चष्टे वरुणो मित्रो अर्यमा (ऋ० सं० ८, ४, २४, १)"—"इतो जातो विश्वमिदं विचष्टे (ऋ० सं० १, ७, ६, १)"—इति निगमौ॥

(६) विचर्षणिः। (७) विश्वचर्षणिः। विपूर्वात् विश्वपूर्वाच्च 'कृष विलेखने (भू० प०)'—इत्यस्मात् 'कृषेरादेश्च चः (उ० २, ८७)'—इति अनिप्रत्ययः, आदेः ककारस्य चकारः। यद्वा, चायतेरेव बाहुलकात् अनिप्रत्ययो धातोश्चर्षभावश्च। विविधं द्रष्टा विचर्षणिः। विश्वस्य द्रष्टा विश्वचर्षणिः। "मक्षू न पिपर्षि विद्म्य विचर्षणे (ऋ० सं० १, ३, ३३, १)"—"स्तोमेभिर्विश्वचर्षणे (ऋ० सं० १, १, १७, ३)"—इति निगमौ॥

(८) अवचाकशत्। 'काशृ दीप्तौ (भू० आ०)' अवपूर्वः। यङ्लुकि शतरि व्यत्ययेन ह्रस्वत्वम्। "जनानां धेना अवचाकशद् वृषा (ऋ० सं० ७, ८, २५, १)"—"उभे सोमावचाकशत् (ऋ० सं० ६, ८, २२, ४)"—इति निगमौ॥

इत्यष्टौ पश्यतिकर्माणः॥ ११॥

———

हिकम् (१)। नुकम् (२)। सुकम् (३)। आहिकम् (४)। आकीम् (५)। नकिः (६)। माकिः (७)। नकीम् (८)। आकृतम्। (९) इति नवोत्तराणि पदानि सर्वपदसमाम्नानाय ॥१२॥

(१) हिकम्। (२) नुकम्। (३) सुकम्। (४) आहिकम्। (५) आकीम्। (६) नकिः। (७) माकिः। (८) नकीम् एते निपाताः। "वसुर्वसुपतिर्हिकम् (ऋ० सं० ६, ३, ४०, ४)"—"इमा नु कम्भुवना (ऋ० सं० ८, ८, १५, १)"—"सौषभामातिष्वर्तलवतासुकम्"—"पृङ्क्त हवींषि मधुना हि कं गतम् (ऋ० सं० २, ८, १, ५)"—"आकीं सूर्यस्य रोचनात् (ऋ० सं० १, १, २७, ३)"—"न किरिन्द्र त्वदुत्तरो (ऋ० सं० ३, ६, १९, १)"—"माकिर्नेशन्माकीं रिषत् (ऋ० सं० ४, ८, २०, २)"—"नकीं वृधीक इन्द्र ते (ऋ० सं० ६, ५, ३१, ४)"—इति निगमाः ॥

(९) आकृतम्। निष्ठान्तस्य कृतशब्दस्यात्र पाठात् मङ्गलेरयमपि निपातसमाहाररूपो निपातितः। कृतशब्दस्य विभक्तिप्रतिरूपकत्वात् निपातत्वमित्याहुः। निगमोऽन्वेषणीयः ॥

इति नव सर्वपदसमाम्नाय ॥ १२ ॥

इदमिव (१)। इदं यथा (२)। अग्निर्न्ये (३)। चतुरश्चिद्ददमानात् (४)। ब्राह्मणा व्रतचारिणः (५)। वृक्षस्य नु ते पुरुहूतवयाः (६)। जार आ भगम् (७)। मेषो भूतोऽभि

यन्नयः (८)। तद्रूपः (९)। तद्वर्णः (१०)। तद्वत् (११)। तथा (१२)। इत्युपमाः ॥ १३ ॥

इदमिवादीनि भाष्यकारेणैव व्याख्यातानि (निरु० ३, १३—१८) ॥ १३ ॥

अर्चति (१)। गायति (२)। रेभति (३)। स्तोभति (४)। गुङ्‌यति (५)। गृणाति (६)। जरते (७)। ह्वयते (८)। नदति (९)। पृच्छति (१०)। रिहति (११)। धमति (१२)। कृपायति (१३)। कृपण्यति (१४)। पनस्यति (१५)। पनायते (१६)। वल्गूयति (१७)। मन्दते (१८)। भन्दते (१९) छन्दति (२०)। छदयते (२१)। शशमानः (२२)। रञ्जयति (२३)। रजयति (२४)। शंसति (२५)। स्तौति (२६)। यौति (२७)। रौति (२८)। नौति (२९)। भनति (३०)। पणायति (३१)। पणते (३२)। सपति (३३)। पपृक्षाः (३४)। महयति (३५)। वाजयति (३६)। पूजयति (३७)। मन्यते (३८)। मदति (३९)। रसति (४०)। स्वरति (४१)। वेनति (४२)। मन्द्रयते (४३)। जल्पति (४४) इति चतुश्चत्वारिंशदर्चतिकर्माणः ॥ १४ ॥

(१) अर्चति। 'अर्च पूजायाम् (भू० प०)'। "अर्चन्त्यर्कमर्किणः (ऋ० सं० १, १, १८, १)"—इति निगमः॥

(२) गायति। 'कै गै शब्दे (भू० प०)'। "गायन्ति त्वा गायत्रिणः (ऋ० सं० १, १, १८, १)"—इति निगमः॥

(३) रेभति। (४) स्तोभति। 'रेभृ शब्दे (भू० आ०)' 'ष्टुभ स्तम्भे (भू० आ०)'। आत्मनेपदिनौ व्यत्ययेन परस्मैपदम्। "रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायन् (ऐ० ब्रा० ६, ५, ६)"—"सोमः पवित्रमभ्येति रेभन् (ऋ० सं० ७, ४, ७, १)"—"परिष्टोभत विंशतिः (ऋ० सं० १, ५, ३०, ४)"—इति निगमाः॥

(५) गूर्दयति॥ नैरुक्तधातुः। "तद्गूर्दया स्वरम् (ऋ० सं० ६, १, २८, १)"—इति निगमः॥

(६) गृणाति। 'गॄ शब्दे' क्र्यादिः स्वादिश्च। "कण्वतमो नाम गृणाति नृणाम् (ऋ० सं० १, ४, ३, ४)"—इति निगमः॥

(७) जरते। नैरुक्तधातुः। "पुरुणीथ जरते सूनृतावान् (ऋ० सं० १, ४, २५, ७)"—इति निगमः॥

(८) ह्वयते। 'ह्वेञ् स्पर्धायाम् (भू० उ०)'। "वाहिष्ठो वां हवानाम् (ऋ० सं० ६, २, २८, १)"—इति निगमः। 'हवाः स्तोमाः ह्वयतेरर्चतिकर्मत्वात्'—इति स्कन्दस्वामी॥

(९) नदति। 'णद अव्यक्ते शब्दे (भू० प०)'। "नदस्य मा रुधतः काम आगन् (ऋ० सं० २, ४, २२, ४)"—इति निगमः॥

(१०) पृच्छति। 'प्रच्छ ज्ञीप्सायाम्' तुदादिः। 'ग्रहिज्या (६, १, १६)'—इत्यादिना सम्प्रसारणम्॥

(११) रिहति। 'रिह कत्थनादौ'—इति क्षीरस्वामी।

[द्युता]दिः । "शिशुं न विप्रा मतिभी रिहन्ति (ऋ० सं० ८, ७, १)"—इति निगमः । अत्र भाष्ये तु "समानवृत्तित्व-प्रदर्शनपरं लिहन्ति पर्य्यायवचनम्'—इति । "विप्रा रिहन्ति धीतिभिः (ऋ० सं० १, २, ६, ४)"—इत्यत्र 'रिहतिधमती-त्यर्चतिकर्मसु पाठात्'– इति स्कन्दस्वामी ॥

(१२) धमति । गतिकर्मसु व्याख्यातः (२०३ पृ०) ॥

(१३) कृपायति । (१४) कृपण्यति । (१५) पनस्यति । [कण्ड्वादि]धातवः । "मर्वताता ये कृपणन्त रत्नम् (ऋ० सं० ८, ८, ५, ३)"—इत्यत्र 'कृपणन्त स्तुवन्ति'—इति भट्टभास्कर-मिश्रः । "त्वेषं पनस्युमर्किणम् (ऋ० सं० १, ३, १७, ५)"—इति निगमः । 'पनस्यतिरर्चतिकर्मा, स्तुत्यमित्यर्थः'—इति स्कन्दस्वामी ॥

(१६) पनायते । 'पण व्यवहारे स्तुतौ च'—'पन च (भ्वा० आ०)' । गुपूधूपविच्छिपणिपनिभ्य आयः (३, १, २८)' । "अभीशूनां महिमानं पनायत (ऋ० सं० ५, १, २०, १)"—इति निगमः ॥

(१७) वल्गूयति । 'वल्गु पूजामाधुर्ययोः' कण्ड्वादिः । "वल्गूयति वन्दते पूर्वभाजम् (ऋ० सं० ३, ७, २७, २)"—इति निगमः ॥

(१८) मन्दते । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भू०)' आत्मनेपदी । "प्र वो मह्रे मन्दमानायान्धसः (ऋ० सं० ८, १, ९, १)"—इति निगमः ॥

(१९) भन्दते । 'भदि कल्याणे सुखे च' आत्मनेपदी । "पुरुप्रियो भन्दते धामभिः कविः (ऋ० सं० २, ८, २०, ४)"—इति निगमः ॥

(२०) छन्दति । 'छदि संवरणे' चुरादिः । बहुलमन्यत्रापि

सञ्ज्ञाच्छन्दसोः (उ० २, २१)'—इति लुक्। "वृषाच्छन्दु भवति हर्यतो वृषा (ऋ० सं १, ४, १८, ४)"—इति निगमः

(२१) छदयति। 'छद अपवारणे' चुरादिः। 'सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ८३)'—इति वृद्धग्भावः। 'अदन्तोद्रष्टव्यः'—इति भट्टभास्करमिश्रः॥

(२२) शशमानः। 'शशमानः शंसमानः (निरु० ६, ८)'-इति भाष्ये 'शंसु स्तुतावित्यस्य शंशन्नित्यवगम्यते'—इति स्कन्दस्वामी। शंसेर्लटि पृषोदरादित्वाद्रूपसिद्धिः। यद्वा, 'शश प्लुतगतौ (भू० प०)'। 'ताच्छील्यवयोवचनशक्तिषु चानश् (३, २, १२९)'। "यो वां यज्ञैः शशमानोह दाशति (ऋ० सं० २, २, २१, २)"—इति निगमः॥

(२३) रञ्जयति। (२४) जरयति। 'रञ्ज रागे (भू० उ०) 'जृष् वयोहानौ (दि०प०)' हेतुमतो णिच्॥

(२५) शंसति। 'शंसु स्तुतौ (भू० प०)'। "मा चिदन्यद्विशंसत (ऋ० सं० ५, ७, १०, १)"—इति निगमः॥

(२६) स्तौति। 'ष्टु स्तुतौ' अदादिः। 'उतो वृद्धिर्लुकिहलि (७, ३, ८९)'। "इदमित् स्तोतारं वृषणं सचासुतः"—इति निगमः॥

(२७) यौति। (२८) रौति। (२९) नौति। 'यु मिश्रणे' 'रु शब्दे' 'नु स्तुतौ' अदादयः। "रुवद्धोक्षापप्रथानेभिरेवैः (ऋ० सं० ३, ८, ८, १)"—इति निगमः। "द्युक्षं गर्भि प्रणोनुमः (ऋ० सं० १, ५, २६, १)"—इति निगमः॥

(३०) भनति। नैरुक्तधातुः।

(३१) पणायति। (३२) पणते। 'पण व्यवहारे स्तुतौ च (भू० आ०)'। 'गुपूधूप (३, १, २८)'—इत्यादिना आयः, छान्दसत्वात् आयप्रत्यये विकल्पिते पणते इति रूपम्

देवो नयत् सविता सुपाणिः (ऋ० सं० ३, २, १३, १)"—इति निगमः। 'पाणिः पणायतेः पूजाकर्मणः (२, २६)'—इति निरुक्तम् ॥

(३३) सपति। 'षप समवाये (भू० प०)'। "मत्सरासः स्वर्पः साकमीरते (ऋ० सं० ७, २, २२, २)"। 'प्रसुपः सपतेर्वतिकर्मणः'। "वि ये चृतन्त्यृता सपन्तः (ऋ० सं० १, ५, १, ४)"—इति निगमौ ॥

(३४) पपृच्चाः। पृच्छतिर्नैरुक्तधातुः। पृचेः सनि 'हलन्ताच (१, २, १०)'—इत्यत्र हल्ग्रहणस्य जातिवाचकत्वात् 'अनिदिताम् (६, ४, २४)'—इति नलोपः गुणाभावश्च। सनन्ताल्लेटि (३, ४, ७), सिपि (३, १, ३४), आडागमे (३, ४, ९४), 'इतश्चलोपः (३, ४, ९७)'। "वायो तव प्रपृच्चती (ऋ० सं० १, १, ३, ३)'—इत्यत्र 'पपृच्चाः, महयति,—इत्यर्चतिकर्मसु पाठात् पृच्छतिः स्तुत्यर्थोऽपि'—इति स्कन्दस्वामी ॥

(३५) महयति। 'मह पूजायाम् चुरादिरदन्तः। "त्वं सु मेषं महया स्वर्विदम् (ऋ० सं० १, ४, ११, १)"—इति निगमः ॥

(३६) वाजयति। वर्जेर्णिच्। "वाजयामः शतक्रतो (ऋ० सं० १, १, ८, ४)"—इति निगमः ॥

(३७) पूजयति। 'पूज पूजायाम्' चुरादिः ॥

(३८) मन्यते। 'मन ज्ञाने' दिवादिः। "इमा उ वां भृमयो मन्यमानाः (ऋ० सं० ३, ४, ९, १)"—इति निगमः ॥

(३९) मदति। 'मदी हर्षग्लेपनयोः (दि० प०)'। "द्युमन्तो याभिर्मदेम (ऋ० सं० १, २, ३०, ३)"—इन्द्रं गीर्भिर्मदता वस्वो अर्णवम् (ऋ० सं० १, ४, ९, १)"—इति निगमौ। 'मदति रसतीत्यर्चतिकर्मसु पाठात्'—इति स्कन्दस्वामिभाष्यम् ॥

(४०) रसति। 'रस शब्दे (भू० प०)'।

(४१) स्वरति। 'स्वृ शब्दोपतापयोः (भू० प०)'। "स्वरी-त्यद्रिं स्वर्या३ नवग्वैः (ऋ० सं० १, ५, १, ४)"—"ऋषिस्वरं चरति यासु नाम ते (ऋ० सं० ४, २, २४, ३)"—इति निगमौ॥ "स्वरीत्यद्रिम्"—इत्यत्र 'स्वरति वेनतीत्यर्चति-कर्मसु पाठात्'—इति, "ऋषिस्वरम्"—इत्यत्र 'स्वरतिरर्चति-कर्मा'—इति च स्कन्दस्वामी॥

(४२) वेनति। (४३) मन्द्रयते। नैरुक्तधातू। "अनर्वाणं वृषभं मन्द्रजिह्वम् (ऋ० सं० २, ५, १२, १)"—इति निगमः। 'मन्द्रयतिरर्चतिकर्मा स्तुत्यवाचकम्'—इति स्कन्द-स्वामी॥

(४४) जल्पति। 'जल्प व्यक्तायां वाचि (भू० प०)'॥

इति चतुश्चत्वारिंशदर्चतिकर्माणः॥ १४॥

विप्रः (१)। विग्रः (२)। गृत्सः (३)। धीरः (४)। वेनः (५)। वेधाः (६)। कण्वः (७) ऋभुः (८)। नवेदाः (९)। कविः (१०)। मनीषिः (११)। मन्धाता (१२)। विधाता (१३)। विपः (१४)। मनश्चित् (१५)। विपश्चित् (१६)। विपन्यवः (१७)। आकेनिपः (१८)। उशिजः (१९)। कीस्तासः (२०)। अद्धातयः (२१)। मतयः (२२)। मतुथाः (२३)। वाघतः (२४)। इति चतुर्विंशतिर्मेधाविनामानि॥ १५॥

(१) विप्रः। 'टु वप वीजसन्ताने (भ्वा० उ०)'। 'विप प्रेरणे'—इति क्षीरस्वामी। 'ऋज्रेन्द्राग्रवज्रविप्र (उ० १, २७)'—इत्यादिना रन्प्रत्यये इत्वं गुणाभावश्च निपात्यते। उप्यतेऽस्मिन्नतिशयेन मेधा। क्षिपत्यनया पापं वा। यद्वा, 'विप्'—इति सङ्ग्रामनामसु व्याख्यातम् (१६२ पृ०), सास्यास्तीति रो मत्वर्थीयः, पृषोदरादित्वात् जश्त्वाभावः। आश्रयो हि मेधा। यद्वा, 'प्रा पूरणे (अदा० प०)' विपूर्वः। 'आतोऽनुपसर्गे (३, २, ३)'—इति कः। 'आतो लोप इटि च (६, ४, ६४)'। विशेषेण पूरयति विद्यार्थिनामपेक्षाः। "गृणन्ति विप्र ते धियः (ऋ० सं० १, १, २६, २)"—इति निगमः॥

(२) विप्रः। विपूर्वात् गृणातेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति डः। विविधं गृणात्यर्थान्। "परे हि विग्रमस्तृतम् (ऋ० सं० १, १, ७, ४)"—इति निगमः॥

(३) गृत्सः। 'गृधु अभिकाङ्क्षायाम् (दि०प०)' 'ऋचिवृषिवदिहृश्विगृगद्भ्यः कित्'—इति सप्रत्ययः। अभिकाङ्क्षते सर्वैः। यद्वा, गृणातेः स्तुतिकर्मणो बाहुलकात् सक्प्रत्ययो ह्रस्वत्वं तुगागमश्च। स्तुत्यो लोकस्य, स्तोता वा देवानाम्। "गृत्सस्य धीरा स्तवसो विवो मदे (ऋ० सं० ७, ७, ११, ५)"—"नमो गृत्सेभ्यो गृत्सपतिभ्यश्च (य० वा० सं० १६, २५)"—इति निगमौ॥

(४) धीरः। दधातेः 'सुसूधीगृधिभ्यः क्रन् (उ० २, २३)'—इति क्रन्प्रत्ययः, 'घुमास्थागापा (६, ४, ६६)'—इतीत्वम्। धत्ते श्रुतमर्थम्, ददाति वा विद्याः शिष्येभ्यः। यद्वा, धीः प्रज्ञा, कर्म वा, रो मत्वर्थीयः। 'धियमीरयति'—इति क्षीरस्वामी। तत्र धीशब्द उपपदे 'कर्मण्यण् (३, २, १)'।

"समाधीर: पाकुमत्राविवेश (ऋ० सं० २, ३, १८, १)" इति निगमः॥

(५) वेनः। अजतेः 'धापॄवस्यज्यतिभ्यो नः (उ० ३, ६)'—इति नप्रत्ययः, वीभावः। गच्छति सत्कारं लोके, अवगच्छत्यर्थान्, अवगच्छत्यस्मादर्थसंशयान्, गच्छन्त्येनं विद्यार्थिनः, क्षिपत्यनर्थान् पापं वा। यद्वा, वेनतेः कान्तिकर्मणो गतिकर्मणो वार्त्तिकर्मणो वा 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)'। "गिरि न वेना अधिरोह तेजसा (ऋ० सं० १, ४, २१, २)"—इति निगमः॥

(६) वेधाः। दधातेर्विपूर्वात् 'विधाञो वेध च (उ० ४, २१८)'—इत्यसुन् वेधादेशश्च। विदधाति काव्यादि। "मोषथा वृक्षं कपनेव वेधसः (ऋ० सं० ४, ३, १५, १)"—"सोमो न वेधा ऋतप्रजातः (ऋ० सं० १, ५, ८, ५)"—"आ पृच्छ्यो विश्पतिर्विक्षु वेधाः (ऋ० सं० १, ४, २६, २)"—इति निगमाः॥

(७) कण्वः। 'कण शब्दे (भू० प०)' 'कण निमीलने (चु० प०)' वा। 'अशुप्रुषिलटिकणिखटिविशिभ्यः क्वन् (उ० १, १४८)'। कणति स्तोत्रलक्षणं शब्दं करोति, कण्यते स्तूयते वा, निमीलयति परान् वा स्वतेजसा। "कण्वा अभि प्रगायत (ऋ० सं० १, ३, १२, १)"—"कण्वतमो नाम गृणाति नृणाम् (ऋ० सं० १, ४, ३, ४)"—इति निगमौ॥

(८) ऋभुः। 'ऋभुक्षा इत्यत्र व्याख्यातम् (२४८ पृ०)'। "ऋभुरृभुभिरभि वः स्याम (ऋ० सं० ५, ४, १५, २)"—इति निगमः।

(९) नवेदाः। "एषां भूत नवेदा मतावाम् (ऋ० सं० २, ३, २६, ३)"—इत्यत्र नवेदेति न वेत्तीत्यस्मिन्नर्थे वर्त्तते

कथमेतत्? निपातनात्, वैयाकरणा 'नभ्राण्नपान्नवेदा (६, ३, ७५)'—इति निपातयन्ति'—इति स्कन्दस्वामी। तत्र द्विनञ्पूर्वाद् विदेः कर्त्तर्यसुनि एकस्य नञो लोपोऽन्यस्य प्रकृतिभावश्च निपात्यत इति भावः। "त्रिश्चिन्नो अद्या भवतं नवेदसा (ऋ० सं० १, ३, ४, १)"—इति निगमः॥

(१०) कविः। 'कविः क्रान्तदर्शनो भवति कवतेर्वा (निरु० १२, १३)'—इति भाष्ये 'क्रामतेः कवतेर्वा गतिकर्मण इति रूपम्'—इति स्कन्दस्वामी। क्रामतेः कवतेश्च 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इतीन्प्रत्ययः क्रामतेर्मकारस्य वत्वं रेफलोपश्च बाहुलकात्। क्रान्तमस्यास्तीति मत्वर्थीयस्य लुक्। कविः क्रान्तदर्शनः। 'अतीतानागतविप्रकृष्टविषयं युगपत् ज्ञानं यस्य स क्रान्तदर्शनः'—इत्युवटः। "कवी नो मित्रावरुणा (ऋ० सं० १, १, ४, ३)"—इति निगमः॥

(११) मनीषिणः। 'मनु अवबोधने (दि० आ०)'। 'ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः' ... 'ऋतभ्यामीषन् (उ० ४, २६)'—इति बाहुलकादीषन्। मनीषा प्रज्ञाऽस्यास्ति व्रीह्यादित्वात् इनिः। यद्वा, मनस ईषा स्तुतिः प्रज्ञा वा मनीषा। पृषोदरादित्वाद्रूपसिद्धिः। पूर्ववदीषन्। "घृतपृष्ठं मनीषिणः (ऋ० सं० १, १, २३, ५)"—इति निगमः।

(१२) मन्धाता। मन्यतेर्ल्युट्, दधातेस्तृच्। मानस्य ज्ञानस्य विधातयिता, पृषोदरादिः (६, ३, १०९)। "मन्धातासि द्रविणोदा ऋमा वा (ऋ० सं० ७, ५, ३०, २)"—इति निगमः॥

(१३) विधाता। विपूर्वात् दधातेस्तृच्। वेधःशब्दवदर्थः। निगमोऽन्वेषणीयः॥

(१४) विपः। 'विप क्षेपे (तु० प०)'। इगुपधलक्षणः

कः (३, १, १, ३५)। विप्रवदर्थः। "अस्तृ'णाद् बर्हणा विप्र
(ऋ० सं० ६, ४, ४३, १)"—इति निगमः॥ नि

(१५) मनश्चित्। मनःशब्दोपपदात् 'चिती संज्ञाने
(भू० प०) इत्यस्मादौणादिकः क्विप्। मनसा चेतयते
निगमोऽन्वेषणीयः॥

(१६) विपश्चित्। विपो वाचश्चेतयते 'तत्पुरुषे कृ
बहुलम् (६, ३, १४)'—इत्यलुक्। 'विपश्यंश्चेतयते'—इति
क्षीरस्वामी। पृषोदरादित्वात् पश्यतेरूपम्। "धर्मं कृते
विपश्चितं पनस्यवे (ऋ० सं० ६, ७, १, १)"—इन्द्रं पृच्छ
विपश्चितम् (ऋ० सं० १, १, ७, ४)"—इति निगमौ॥

(१७) विपन्यवः। विपनेः 'कत्युच् चिपेश्च (उ० ३, ४८)
—इत्यत्र प्राक्प्रत्ययनिर्देशस्याधिकविध्यर्थत्वात् कत्युच्प्रत्ययः
यद्वा, विविधं पननं स्तुतिः 'मृगय्वादयश्च (उ० १, ३६)'—इति
कुप्रत्ययः। "विपन्यवो विप्रासो वाजसातये (ऋ० सं० ६,
६, १०, ६)"इति निगमः॥

(१८) आकेनिपः। आङ्शब्दे, केशब्दे, निशब्दे चोपपदे
त्रिपूर्वात् पततेः 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति
डः। 'तत्पुरुषे कृति बहुलम् (६, ३, १४)'। के आत्मनि
पतन्ति अध्यात्मज्ञाने पतन्त इत्यर्थः। "अमी यथा केनिपा
मामिनो वृधे (ऋ० सं० ७, ८, २६, ४)"—इति निगमः॥

(१९) उशिजः। 'वश कान्तौ (अदा०प०)' 'वशेः कि
(उ० २, ६८)'—इति इजिप्रत्ययः। ग्रहिज्या (६, १, १६)'
इत्यादिना सम्प्रसारणम्। कामयते शास्त्राण्यभ्यसि
व्याख्यातुं वा। "कक्षीवन्तं य औशिजः (ऋ० सं० १
३४, १)"—इति निगमः॥

(२०) कीस्तासः। कीर्त्तयतेः पचाद्यचि (३, १, १३

विनि वा। कीर्त्तयन्ति प्रशस्तानर्थान् "कीस्तासो अभिद्यवः (ऋ० सं० २, १, १३, २)"—इति निगमः॥

(२१) ऋतायवः। ऋतेति सत्यनाम। ऋततेरतयः। सत्यं प्राप्नोति, गत्यर्था बुद्ध्यर्थाः, सत्यं जानाति वा। "तदृतायवुद्दिदुः (ऋ० सं० ८, ३, २३, १)"—इति निगमः॥

(२२) मतयः। मन्यतेः क्तिन्। आयन्तेऽस्मादर्थाः। यद्वा, मतिरस्यास्ति मत्वर्थीयस्य लुक्। "अद्रोघवाचं मतिभिः शविष्ठम् (ऋ० सं० ४, ६, १३, २)"—"त्वामिन्द्र मतिभिः सुतम्"—इति निगमौ॥

(२३) मतुथाः। 'गूथप्रोथपृष्ठादयः'—इति मनेस्थकि अकारस्य तुभावो निपात्यते। "तुथोऽसि विश्ववेदाः (य० वा० सं० ५, ३१)"। 'विभजत्यः 'ब्रह्म वै तुथः (श० ब्रा० ४, ३, ४, १५)'—इति श्रुतिः—इत्युवटः। मतं ज्ञानं तुथो मनुष्यैः। तेन मतुथाः सन्तः पृषोदरादित्वेन मतुथाः। निगमोऽन्वेषणीयः॥

(२४) वाघतः। वहेः 'संश्वत्तृम्पद्वेहत् (उ० २, ८६)'—प्रत्ययः, उपधावृद्धिः, हकारस्य घकारश्च निपात्यते। ... प्रस्यार्थान्। "विष्टी शमी तरणित्वेन वाघतः (ऋ० सं० १, ७, ३०, ४)"—इति निगमः॥

इति चतुर्विंशतिर्मेधाविन इति मेधाविनामानि॥१५॥

रेभः (१)। जरिता (२)। कारुः (३)। नदः (४)। स्तामुः (५)। कीरिः (६)। गौः (७)। सूरिः (८)। नादः (६)। छन्दः (१०)। स्तुप् (११)। रुद्रः (१२)। कृपण्युः (१३) इति त्रयोदश स्तोतृनामानि॥ १६॥

(१) रेभः । रेभतिरर्चतिकर्मा (२७२ पृ०) । अच् । स्तौति [redacted] निगमोऽन्वेषणीयः ॥

(२) जरिता । जरतेरर्चतिकर्मणः (२७२ पृ०) । "त्वामर्च्छा जरितारः (ऋ० सं० १, १, ३, २)"—इति निगमः ॥

(३) कारुः । करोतेः 'कृवापाजि (उ० १, १)'—इत्युण् कर्त्ता "विदुष्टे तस्य कारवः (ऋ० सं० १, १, २१, ६)"—इति [redacted] निगमः ॥

(४) नदः । नदति स्तुतिकर्मा (२७२ पृ०) । अच् । "नदस्य मा रुधत काम आगन् (ऋ० सं० २, ४, २२, ४)"—इति निगमः ॥

(५) स्तामुः । 'षम ष्टम अवैक्लव्ये (भू० प०)' । 'छन्द-मीणः (उ० १, २)'—इति बाहुलकादुण् । स्तोत्रकर्मणि "तामु"—इति केचित् पठन्ति । 'तमु काङ्क्षायाम् (दि० प०)' । पूर्ववद् बाहुलकादुण् । काङ्क्षति स्तोतुम् । उभयो-रेव निगमोऽन्वेषणीयः ॥

(६) कीरिः । 'कै गै रै शब्दे (भू० प०)' । 'कायः कीः'—इति इप्रत्ययः । आकारलोपः । स्तोत्रलक्षणं शब्दमारच-यति । 'इन् सर्वधातुभ्यः (उ० ४, ११४)' "कीरिश्चिद्धान्त्वं मनसा वनोषि तम् ( ऋ० सं० १, २, ३४, ३ )"—इति निगमः ॥

(७) गौः । व्याख्यातं पृथिवीनामसु ( ४ पृ० ) । गीयन्ते स्तूयन्तेऽनेन देवताः । "यो अश्वानां गवां गोपतिर्वशी (ऋ० सं० १, ७, १२, ४)"—इति निगमः । 'गोपतिः स्तोत्रपतिः' —इति स्कन्दस्वामी ॥

(८) सूरिः । 'षू प्रेरणे (तु० प०)' । 'सूङः क्रिः (उ० ४, ६४)'—इति सुवतेः क्रिर्भवति । प्रकर्षेण ईरयति स्तोत्रम्

सदा पश्यन्ति सूरयः (ऋ० सं० १, २, ७, ५)"—इति निगमः॥

(९) नादः। नदतेर्घञ्। भवत्यस्मात् स्तुतिः। निगमोऽन्वेषणीयः॥

(१०) छन्दः। छन्दतिरर्चतिकर्मा (२७३ पृ०)। असुन्। छद आच्छादने (चु० प०)'। 'छदेश'—इत्यसुन्। आच्छादयति स्तोतैः। निगमोऽन्वेषणीयः॥

(११) स्तुप्। स्तोभतिरर्चतिकर्मा (२७२ पृ०)। क्विप्। निगमोऽन्वेषणीयः॥

(१२) रुद्रः। रौतेः क्विप्, रुत् शब्दः, मत्वर्थीयो रः। स्तोबलचणशब्दवानित्यर्थः। "क्राणा रुद्रेभिर्वसुभिः पुरोहितः (ऋ० सं० १, ४, २३, ३)"—इति निगमः॥

(१३) कृपण्युः॥

इति त्रयोदश स्तोतृनामानि॥ १६॥

यज्ञः (१)। वेनः (२)। अध्वरः (३)। मेधः (४)। विदथः (५)। नार्य्यः (६)। सवनं (७)। होत्रा (८)। इष्टिः (९)। देवताता (१०)। मखः (११)। विष्णुः (१२)। इन्दुः (१३)। प्रजापतिः (१४)। घर्मः (१५)। इति पञ्चदश यज्ञनामानि॥ १७॥

(१) यज्ञः। 'प्रख्यातं यजतिकर्मेति नैरुक्ताः (३, १९)'—इत्यादि भाष्यकारेण, स्कन्दस्वामिना च यज्ञशब्दो बहुधा व्युत्पादितः। यजेः 'यजयाचयतविच्छप्रच्छरक्षो नङ् (३, ३, ९०)' यजनम्। इज्यन्तेऽत्र देवताः। अन्येषु पृषोदरा-

दित्वेन रूपसिद्धिः। "यज्ञेर्यज्ञे न ऊर्द्ध (ऋ० सं० ३, ८, २ ४)"—इति निगमः॥

(२) वेनः। व्याख्यातं मेधाविनामसु (२७८ पृ०) गच्छत्यनेन स्वर्गम्, प्रक्षिप्यते देवतोद्देशेन वास्मिन् हव्यम्, तेनाः देवताः काम्यन्ते वा। निगमोऽन्वेषणीयः॥

(३) अध्वरः। ध्वरतेर्बधकर्मणः 'पुंसि सञ्ज्ञायां घः ४, ११८)'। नञ्पूर्वः। ध्वरा हिंसा, तदभावो यत्र। अतएव शिष्टाः स्मरन्ति—'ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा। यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्'—इति। तस्मादुपपन्नं यज्ञे हिंसा स्वजित्यामितद्यज्ञीयवचनादहिंसा प्रतीयते। अन्यत्र विस्तरेणोपपादितः। अथवा षष्ठ्यर्थे बहुव्रीहिः। अविद्यमानोऽध्वरो यस्य सोऽध्वरः रक्षोभिरहिंसितः। "राजन्तमध्वराणाम् (ऋ० सं० १, १, २, ३)" —इति निगमः॥

(४) मेधः। व्याख्यातं धननामसु (१८० पृ०)। गच्छन्त्यत्र देवता हविर्ग्रहीतुं, दक्षिणार्थं वा मदस्यात्, हिनस्त्यनेन पापं वा। 'कर्त्ता यज्ञो द्रव्याणामृतसामर्थ्याद्धविषश्च सारभूतात्' —इति माधवः। "मेधं जुषन्त वह्नयः (ऋ० सं० १, १, ६, ३)"—"तं मेधेषु प्रथमं देवयन्तीः (ऋ० सं० १, ५, २५, ३)" —इति निगमौ॥

(५) विदथः। 'विद ज्ञाने (अदा०प०)' 'विद विचारणे (रु० धा०)' 'विदॢ लाभे (तु० उ०)' 'विद सत्तायाम् (दि० धा०)'। 'रुदिविदिभ्यां ङित् (उ० ३, ११९)'—इति अथप्रत्ययः। ज्ञायते हि यज्ञः, लभते हि दक्षिणादिरत्र, विचार्यते हि विद्वद्भिः, भावयत्यनेन फलम्। "यधा जिव्रो विदथमावदाथः (ऋ० सं० ८, ३, २५, २)"—इति निगमः॥

(६) नार्यः । 'नृ नये' क्र्यादिः । 'ऋहलोर्ण्यत् (३, १, २४)' । नयति स्वर्गं कर्त्तारम्, नीयतेऽत्रमनुष्ठानेन वा ।

(७) सवनम् । 'षुञ् अभिषवे (स्वा० उ०)' । 'सुयुरुहृभ्यो ल्युट् (उ० २, ७०)' । अभिषूयतेऽस्मिन् सोमः । "उप नः सवना गहि (ऋ० सं० १, १, ७, २)"—इति निगमः ॥

(८) होत्रा । व्याख्यातं वाङ्नामसु (७३ पृ०) । हूयतेऽस्मिन् हविः । "होत्राविदः स्तोमतष्टासो अर्कैः (ऋ० सं० ३, ६, १८, ४)"—इति निगमः ॥

(९) इष्टिः । यजेरिषेर्वा क्तिन् । यजतेर्यत्रवदर्थः, इष्यते हि सः । 'इष्टिशब्दो हविर्यज्ञे आद्युदात्तः, यज्ञमात्रे नोदात्तः' —इति माधवः । "यथातद्यज्ञमीळये (ऋ० सं० १, २, ३०, ३)"—इति निगमः ॥

(१०) देवताता । 'दिवु क्रीड़ादौ (दि० प०)' । दीव्यन्ति स्तुवन्त्यत्र देवताः । देव एव देवता । 'सर्वदेवात्तातिल् (४, ४, १४३)' सप्तम्या आकारः (७, १, ३९) । "त्रिर्देवताता त्रिरुताहृत धियः (ऋ० सं० १, ३, ४, ५)"—"आ देवताता हविषा विवासति (ऋ० सं० १, ४, २३, १)"—इति निगमौ ॥

(११) मखः । 'मह पूजायाम् (भू० प०)' । 'महेः ख च' खप्रत्ययो हलोपश्च । महन्त्यत्र देवताः । यद्वा, 'मख गतौ' घः । वेनवदर्थः । "मखः सहस्वदर्चति (ऋ० सं० १, १, १२, ३)"—"विवक्ति वह्निः स्वपस्य ते मखः (ऋ० सं० ७, ६, १०, १)"—इति निगमौ ॥

(१२) विष्णुः । विष्लृ व्याप्तौ (जु० उ०)' । 'विषेः किच्च (उ० ३, ३७)'—इति नुप्रत्ययः । विशेषेणाप्नोति स्वर्गम् ।

